§ ८. इतोऽप्यवयविनोऽनेकावयववृत्तेर्विरुद्धधर्माक्रान्तता । यत एकस्मिन्नवयवे चलति[1] चलत्वं प्राप्नोति । पुनस्तदेव द्वितीयावयवाचलत्वेऽचलत्वम् । तथैकावयवरागे रागोऽपरागे चापरागः[2] । तथा, आवरणे आवरणम्, अनावरणे चानावरणमिति निरंशस्य युगपच्चलाचलत्वादियोगो विरुद्धधर्मसंसर्गः । न चावयवानामेव चलत्वादिकं नावयविन इति वक्तव्यम् । एकस्य पाण्यादेश्चलाचलादिप्रतीतिप्रसङ्गात् । तथा हि—अवयवचलनाचलत्वावभासः स्यात्, तत्रैव चावयवे स्थितस्यावयविनोऽचलनादचलत्वप्रतीतिरित्येवं रक्तादिषु अपि वाच्यम् ।

§ ९. किञ्च—अवयवेभ्योऽवयवी भिन्नो वा[3] स्यादभिन्नो वा[4] ? । यद्यभिन्नः, तदाऽवयवभेदवद् अवयविनः खण्डशो भेदप्रसङ्गः । अवयविस्वरूपवद्वा अवयवानामभेदः स्यात् । तथा चैकस्यानंशस्याप्रतिभासनाद् अप्रतिभासं जगत् स्यात् । अथ भिन्नः, तदा तस्यानुपलम्भाद् असत्त्वमेव । तथा हि—यदुपलब्धिलक्षणप्राप्तं सन्नोपलभ्यते तदसदिति व्यवहर्तव्यम् । यथा खर[5]विषाणादि । नोपलभ्यते चोपलब्धिलक्षणप्राप्तो[6]ऽवयवेभ्यो व्यतिरिच्यमानमूर्तिरवयवीति स्वभावानुपलब्धिः । परैरवयविनो[7] दृश्यत्वाभ्युपगमान्नासिद्धविशेषणता[8] हेतोः । ऊर्ध्वाधोमध्यभागव्यतिरिक्तवपुषोऽप्रतिभासनात् न स्वरूपासिद्धता[9] । न च समानदेशत्वादवयविनोऽवयवेभ्यः पृथगनुपलक्षणमिति वाच्यम्, समानदेशत्वेऽपि रूपरसयोर्वातातपयोश्चैकेन्द्रियग्राह्यत्वेऽपि पृथगुपलक्षणात् ।

§ १०. अथ दूरदेशस्यावयवाप्रतिभासेऽप्यवयविनः प्रतिभासनात् कथं नासिद्धता ? । तदसत्, अस्पष्टाकारस्यावस्तुत्वेन तत्प्रतिभासस्य भ्रान्तत्वात् । वस्तुत्वे वा[10]ऽन्यस्यापि निकटदेशस्य सोऽस्पष्टाकारः सुतरां प्रतिभासेत[11] । अथाकारद्वयमवयविनः स्पष्टम् अस्पष्टञ्च । तत्र निकटस्थः स्पष्टमुपलभते, दूरस्थ[12]स्तु अस्पष्टमिति । ननु असावस्पष्टाकारो यदि अवयवदेशः, तदा निकटस्थ आकारद्वयमुपलभेत । अथान्यदेशस्त[13]दात्मनः पृष्ठतः तं पश्येत् । किञ्च तदाकारद्वयम् अवयविनः केन गृह्यते ? । न तावद्दूरदेशज्ञानेन[14] । तत्र निकटदेशज्ञानविषयस्पष्टरूपानवभासनात् । अस्पष्टस्वरूपप्रतिभासं हि तदनुभूयते । नापि निकटदेशज्ञानेन । स्पष्टरूपावभासवेलायां हि तत्र[15] नापरोऽस्पष्टाकारः प्रतिभाति[16] । तन्नावयविन आकारद्वययोगः ।

§ ११. अथ 'दूरदृष्टमवयविनः स्वरूपं परिस्फुटमिदानीं पश्यामि' इति तयोरेकता । ननु किमपरिस्फुटरूपतया परिस्फुटमवगम्यते, आहोस्विन् परिस्फुटरूपतयाऽपरिस्फुटम् ? । तत्र यद्याद्यः पक्षस्तदाऽपरिस्फुट[17]स्वरूपसंबन्धित्वमेवावयविनः प्राप्नोति, परिस्फुटरूपस्यापरिस्फुटरूपानुप्रवेशेन प्रतिभासनात् । अथ द्वितीयः, तदा स्पष्ट[18]स्वरूपसंबन्धित्वमेव स्यात्, अस्फुटस्य विशदरूपानुप्रवेशेनावभासनात् । तन्न स्वरूपद्वयावगमोऽवयविनः । न चैकस्य विरुद्धधर्मद्वययोग उपपत्तिमान् । ततः स्फुटास्फुटरूप[19]योरेकत्वप्रतिभासनमभिमानमात्रम् ।

---

१. चले सति मु० । २. चाराग अ० व० । ३. भिन्नो स्या° अ० । ४. °भिन्नो यद्य° मु० । ५. खरे विषा° अ० । ६. °प्राप्ताऽवय° क० मु० । ७. °विनोऽदृश्य अ० । ८. °णता । नच मु० । ९ °सिद्धता । अस्पष्टा° अ० । १० °त्वे चान्य° व० । ११. °भासते क० मु० । १२. °स्थोऽस्प° मु० । १३. °देशस्थस्त° मु० । १४. दूरदेशज्ञानम् अ-टि० । १५. हि नाप° अ० । १६. प्रतिभासते क० मु० । १७. स्फुटरूप° मु० क० । १८. स्पष्टरूपत्वमेव क० मु० । १९. °स्फुटतयोरे अ० ।

§१२ अथालोकभावाभावकृतस्तत्र स्फुटास्फुटप्रतिभासभेदः । नन्वालोकेनापि अवयविस्वरूपमेवोद्भासनीयम् । तच्चेत्किल दूरदेशज्ञाने प्रतिभाति कथं न तत्र स्फुटावभासः ? । अन्यथा विषयभेदमन्तरेणापि ज्ञानप्रतिभासभेदे न ज्ञानावभासभेदो रूपरसयोरपि भेदव्यवस्थापकः स्यात् । अथावयविस्वरूपमुभयत्राप्येकमेव प्रतीयते । स्फुटास्फुटाकारौ तु ज्ञानस्यात्मानावित्युच्यते । तदसत् । यदि तौ ज्ञानाकारौ, कथमवयविरूपतया प्रतिभासत इत्यभ्युपगमः ? । तदुपगमेऽवयव्याकारौ तावुपगन्तव्यौ । न चापरं स्फुटास्फुटाकारता मुक्त्वा अवयविस्वरूपमाभाति । व्यक्ताव्यक्ताकारात्मनश्चावयविनो व्यक्ताव्यक्ताकारवद् भेदः । तन्नावयवी दूरदेशस्यावयवाप्रतिभासेऽपि प्रतिभाति ।

§१३ किञ्च–किं कतिपयावयवप्रतिभासे सत्यवयवी प्रतिभातीत्युपगम्यते, आहोस्वित् समस्तावयवप्रतिभासे ? । यद्याद्यः पक्षः, तदा जलमग्नमहाकायस्तम्भादेरुपरितनकतिपयावयवप्रतिभासेऽपि समस्तावयवव्यापिनः स्तम्भावयविनः प्रतिभासः स्यात् । नापि द्वितीयः, मध्यपरभागवर्तिसमस्तावयवप्रतिभासासम्भवेनावयविनोऽप्रतिभासप्रसङ्गात् ।

§१४ अथ भूयोऽवयवग्रहणे सत्यवयवी गृह्यते इत्यभ्युपगमः । तस्मिन्नपि समस्तावयवव्यापिनोऽवयविनोऽग्रहणात् । तथा हि–अर्वाग्भागमात्रावयवग्राहिणा प्रत्यक्षेण परभागभाव्यवयवाग्रहणात् न तेन तद्व्याप्तिरवयविनो गृहीतुं शक्या, व्याप्याग्रहणे तद्व्यापकस्यापि ग्रहीतुमशक्यत्वात्, ग्रहणे वाऽतिप्रसङ्गः स्यात् । न च व्यवहितावयवाप्रतिभासेऽप्य(पि) व्यवहितोऽवयवी प्रतिभाति इति वाच्यम् । व्यवहितावयविस्वरूपावभासे तद्व्याप्यावयविस्वरूपस्याप्यवभासः स्यात्, तथा तदन्यस्यापि इति सर्वस्य सर्वावयविग्रहणप्रसङ्गात् । ततो व्यवहितावयवव्यापिरूपादर्वागवयवव्यापिनोऽवयविरूपस्य भेदप्रसङ्गः । तथा हि–यस्मिन्प्रतिभासमाने यन्न प्रतिभाति तत् ततो भिन्नम् । यथा घटात्प्रतिभासमानात् पटः । न प्रतिभाति चार्वागवयवव्यापिरूपे प्रतिभासमाने परावयवव्याप्यवयविरूपम् । तत् कथं न ततो भिन्नम् । तथाप्यभेदेऽतिप्रसङ्ग उक्तः । परभागावयवग्राहिणा तु प्रत्यक्षेण तद्व्याप्येवाऽवयविस्वरूपं गृह्येत, नार्वागवयवव्यापकमपि पूर्वोक्तनीत्येति । नापि स्मरणेनार्वाक्परावयवव्याप्यवयविस्वरूपग्रहः प्रत्यक्षानुसारेण स्मृतेः प्रवृत्तेरिति । तन्नेश्वरवादिमतेन किञ्चित्कार्यं सिद्धमस्ति ।

§१५ तथा–यथाविधं घटादिषु बुद्धिमता व्याप्तं दृष्टम्, अदृष्टकर्तृकाणामपि जीर्णकूपादिषु 'बुद्धिमता कृतम्' इति बुद्धिमुत्पादयति, न तथाविधं भूधरादिषु सिद्धम् । तदाह–"विशेषेण न सिद्धं भूधरादिष्विति" । नन्वेवं विकल्पने न किञ्चिदनुमानं स्यात् । तथा हि–यथाविधो धूमो धूमध्वजपूर्वकत्वेन दृष्टान्ते दृष्टः, न तथाविधः साध्यधर्मिणि सिद्ध इति । अथ धूमसामान्यं सिद्धम् । अत्रापि कार्यसामान्यमिति समानम् । ननु कार्यसामान्यात्

१ तथि व्य° अ० । २. °रं स्फुटाकारतो मु० । ३ °वयवाभावे अ० ब० । ४ यद्याद्य क० मु० । ५ तदुपगम क० मु० । ६ °र्तिग्रहणा° क० मु० । ७ ग्रहणे तथा° मु० । ८. स्यात् । तत व्य° मु० । ९ तन्न व्य° मु० । १० °माने भावा° अ० । ११ °वयवि° ब० । १२. °णैवावा° ... क० मु० । १३ °ग्रह क्रमात्° ब० । १४ तन्नेश्वरादिवादि° अ० । १५. °कृत्° °रि क० मु० ।

कारणसामान्ये सिद्धेऽपि नेष्टसिद्धिः । न, यथा वह्निसामान्यसिद्धौ तद्विशेषसिद्धिः तथा कारणसामान्यात् कारणविशेषसिद्धौ कथं नेष्टसिद्धिः ? । सिद्ध्यतु यथादृष्टो विशेषः । न हि धूमेनाप्यलौकिको वह्निः साध्यते; तथेहापि दृष्टान्तदृष्टो विशेषः सिद्ध्यतु । न तु नित्य-बुद्ध्यादियुक्तः ।

5 §१६. अपि च—नित्यायां बुद्धौ संबन्धाभावात् मत्वर्थीयोऽपि नोपपद्यते । अनित्यत्वे तु तां[१] यदि बुद्ध्यन्तरेण करोति तदा तामपीति अनवस्था । अथ बुद्धिमन्तरेणापि करोति; तदा न बुद्धिमत्पूर्वकं सर्वमिति व्याप्तिः । अकृष्टोत्पत्तयश्च वने वनस्पतयः कर्तारमन्तरेणापि उत्पद्यमाना दृश्यन्त इति कथं व्याप्तिः ? ।

§१७. अदृश्यत्वात्[२] कर्तुस्तथेति चेत्; ननु किमदृश्यत्वात्, किं वाऽभावात्तथेति संदिग्ध-10 विपक्षव्यावृत्तिको हेतुः । पक्षेण[३] व्यभिचाराभावादिति चेत्; येन येन व्यभिचारः तस्य तस्य पक्षीकरणे न कश्चिद्हेतुः स्यात् । किंच घटेऽपि स एवादृश्यः कर्ता भवतु न कुलालः । तत् कथं तद्दृष्टान्तात् कर्तृसिद्धिः ? । कुलालस्य दृष्टत्वात् नान्यकल्पनेति चेत्; वनस्पत्यादिष्वपि दृष्टमस्तु, किमदृष्टकल्पनया ? । [७]

§१. अपि च—यथाऽयं हेतुः कर्तारं साधयति तथेष्टविपर्ययमपि । तदाह—विरुद्ध-15 मित्यादि ।

## विरुद्धं चेष्टघातेन न कार्यं कर्तृसाधनम् ।

§२. तथा हि—कुलालः शरीरी, सरागः, असर्वज्ञश्च । ईश्वरोऽपि तथा स्यात् । तथा, ईश्वरः कर्ता न भवति, शरीररहितत्वात्, मुक्तात्मवदित्यपि स्यात् ।

ईश्वरकर्तृत्व-निषेधः ।

§३. अथेह हेत्वन्तरेण[४] किं प्राक्तनस्य हेतोरन्यतररूपाभावः ख्याप्यते ?, किं वा तस्मि-20 न्नेव धर्मिणि विशेषः साध्यते ?, यथा शब्दे[५]ऽनित्यत्वे सिद्धे अम्बरगुणत्वमिति । तत्र न तावदनेनान्यतररूपाभावः ख्याप्यते । नापि विशेषः साध्यमानो दोषमावहति । यदि साध्य-विपर्ययसाधनेऽपि न[६] दोषस्तदा न विरुद्धस्य हेतोर्दोषः स्यात् ।

§४. अथ शरीरम[७]स्योपेयते । यदि तन्नित्यम्, तदा 'रचनावत् सर्वं कार्यम्' इति न स्यात् । अथानित्यम्, तदा तदपि शरीरवतान्येन कर्तव्यम् । तदप्यन्येन शरीरिणे[८]त्यनवस्था ।

25 §५. किञ्च—इदं चेतनावताऽचेतनस्याधिष्ठानं किं तद्धेतुकत्वम्, किं वा तदिच्छानु-विधायित्वमिति ? ।

§६. तत्र

"सचेतनं यदा कर्म किमीशेन प्रयोजनम् ।
अचेतनः कथं भावस्तदिच्छामनुवर्तते ॥
30 कुलालकरसंपर्कजन्यः कुम्भस्तदिच्छया ।
दृष्टान्ते न भवन् दृष्टस्तदिच्छासाधनः कथम् ॥
जगतः करणे चास्य यदि किञ्चित् प्रयोजनम् ।
हीयेत[९] कृतकृत्यत्वं प्रेक्षाकारी न चान्यथा ॥

१. तां बुद्ध्य° अ० । २. अदृश्योऽपि करोति चेत् अ० । ३. पक्षेणाव्य° क० मु० । ४. अथ हेत्व° क० च० मु० । ५. शब्दे नित्ये क० मु० ब० । ६. °पि दोष क० मु० । ७. शरीर-मवश्यमभ्युपेयते मु० । ८. शरीरेणे° क० मु० । ९. हीयते ब० मु० ।

प्रेक्षावतां यतो वृत्तिर्व्याप्तास्ते कार्यवत्तया ।
प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते ॥
प्रयोजनं विनाप्यस्य कृपया यदि तत्क्रिया ।
सृजेच्छुभमेवैकं कृपया परिचोदितः ॥
छागादीनां पुरीषादेर्वर्तुलीकरणेन किम् ।
क्रीडार्था तस्य वृत्तिश्चेत् नार्यता स्यात् समाहिता ॥
किंचिन्मात्रविशुद्धोऽपि नार्यः क्रीडासु वर्तते ।
स त्वत्यन्तविशुद्धात्मा कथं क्रीडासु वर्तते ॥
एकस्य क्षणिका तृप्तिरन्यः प्राणैर्वियुज्यते ।
कर्मणा पारतन्त्र्येण यदि चास्य प्रवर्तनम् ॥
कर्मणामीशता प्राप्ता तदा कृत्यमनेन किम् ।
कर्मणां कारणे चास्य सामर्थ्यं यदि विद्यते ॥
शुभान्येव कृपायुक्तः किं न कारयते सदा ।
अनुरूपं फलं यद्वत् मूल्ये दाता प्रयच्छति ।
नासामर्थ्यं न चैवत्व फलस्याप्युपलभ्यते ॥
उत्कमन समर्थश्चेत् शुभं कारयतां सदा ।
अथेदृशः स्वभावोऽस्य कोऽत्र पर्यनुयुज्यताम् ।
स्वभावो यदि विधौ नित्यः संहारं विदधाति किम् ॥
अथानित्यः सहेतुः स्यात् अहेतुर्वेति कल्पना ।
अहेतुर्यदि सर्वस्य स स्वभावः प्रसज्यते ॥
सहेतोर्हेतुरस्यास्तु स एवान्योऽथ कश्चन ।
यद्यन्यस्तत्र कर्तृत्वं स्वभावस्य विधातरि ॥
तेनैव चेद् विधीयेत प्रसङ्गः पूर्ववद् भवेत् ।
किञ्चैककर्तृपूर्वत्वं जगतोऽनेककर्तृता ॥
सर्वास्तेनैकताव्याप्तिः प्रासादादिषु दृश्यते ।
एकेन खनितत्वं चेत् तथापि नियमो नहि ॥
स्वातन्त्र्येण क्वचित्तेषामेककार्ये प्रवर्तनात् ।
अनेककर्तृपक्षश्चेदात्मभिः किं न सिध्यति ? ॥
कुर्वन्तु खण्डमेवैकं तज्ज्ञत्वात् च द्रुचूडवत् ।
ज्ञानवन्तोऽपि तेऽन्येन प्रेर्यन्ते यदि कर्मणि ॥
सोऽप्यन्येन तदन्योऽपीत्यनेकेश्वरसंगमः ।
को दोषश्चेद् भवेदेव नैकोऽपि हि तवेश्वरः ॥
सर्वेषां परतन्त्रत्वात् अनीशत्वं कुलालवत् ।
तदेवं कार्यताहेतुः सर्वदोषैरुपद्रुतम् ।
आधिपत्यं जगतो हेतुं साधयन्तो निराकृताः ॥"

इति निखिलविधानाधीनविज्ञानमस्य, त्रिभुवनभवभावग्राहि दूरान्निरस्तम् ।
तदिह सकलवस्तुज्ञानदृग् यस्य रागात्, कथमिव "वनिताप्रासङ्गिनो मानवाऽस्तु ॥ [८¹]

१ करुणया परि° अ० य० । २. करणे अ० य० मु० । ३ क्रिया अ० । ४ अनुरूप मु० । ५ यथ म मु० । ६ स्वभावश्चेद्विधौ क० । ७ अहेतुश्चेति अ० मु० । ८ °न्यस्यात्र मु० । ९ विधान कम् मु० । १० सम्यक्तेनैक अ० य० । ११ °कार्यप्रव अ० य० । १२. °तदान्यो अ० य० । १३. °दोषैरभिद्रुतम् य० । १४ ज्ञान० ए रागात् मु० । १५ °मिव दयिता क० मु० ।

§१. एवमीश्वरस्य प्रामाण्यं निरस्य सांख्याभिमतस्य प्रकृतिपुरुषान्तरज्ञानस्य प्रामाण्यं निरस्यन्नाह—प्रकृत्यन्तरविज्ञानम्—इत्यादि।

**प्रकृत्यन्तरविज्ञानं पुंसो नित्यमथान्यथा ॥ ८ ॥**
**नित्यत्वे सर्वदा मोक्षोऽनित्यत्वे न तदुद्भवः।**

प्रकृत्यन्तरविज्ञानपरीक्षा।

5 §२. ते हि एवं मन्यन्ते केवलानन्दभोक्तृस्वरूपो हि पुरुषः, प्रकृतिश्चाचिदात्मिका। कथमसौ तां भुङ्क्ते ?। केवलमज्ञानतमश्छन्नः प्रकृतिसाध्यमेवात्मगतं मन्यमानः तत्सुखं दुःखं चोपभुङ्क्ते इति। यदा तु ज्ञानमस्य भवति[1] 'दुःखहेतुरियम्, न ममानया सह संगो[3] युक्तः' इति तदा किमिति तदुपार्जितं कर्मफलमुपभुङ्क्ते ?। सापि च 'विज्ञातस्वरूपाऽहं[4] न मदीयं[5]कर्मफलमनेन भोक्तव्यम्' इति बुद्ध्वा न किंचिदपि करोति। 10 कुट्टिनीव विज्ञा[6]तस्वरूपा दूरादपसर्पति। अतः केवलज्ञानं मोक्षायालमिति।

§३. अत्रेदम[7]भिधीयते—कस्य तज्ज्ञानं किं प्रकृतेरथात्मन इति ?। न तावत् प्रकृतेः, अचिद्रूपत्वात्, अनभ्युपगमाच्च। अत एव 'निर्ज्ञाताऽहमनेन' इति अस्याः याचितकमण्डनम्। अथात्मनः, तदपि किं भिन्नमथाभिन्नम् ?। यद्यभिन्नम्, तदा तत्स्वरूपवत् नित्यं स्यात्। तत आदित एव मुक्तो भवेत्। अत आह 'सर्वदा मोक्षः' इति। अथ भिन्नम्; भिन्नमपि 15 किं नित्यमथानित्यम् ?, नित्यमपि[9] संबद्धम्, असंबद्धं वा ?। असंबद्धे सर्वस्य स्यात्। ततश्च न कस्यापि संसारः। संबन्धोऽपि न नित्ययोः परस्परमनुपकार्योपकारकयोः स्यात्। संबन्धेऽपि वा[10] सदा मुक्तिरिति। अनित्यमपि किं जन्यमजन्यं वा ?। तत्रानित्यमजन्यं चेति व्याहतम्। अव्याहतावपि सर्वस्य स्यात्। जन्यमपि किं प्रकृतिवियुक्तात्मजन्यम्, किं वा तत्सहितजन्यमिति। प्रथमपक्षे इतरेतराश्रयत्वम्। तथा हि—सति ज्ञाने प्रकृतिवियोगः, 20 सति वियोगे तज्ज्ञानमिति। तत्सहितजन्यत्वे किं तद्वियोगेन ?। सर्वदा सर्वेषां च[11] मुक्तिः स्यात्। ननूक्तम् 'अविज्ञानतमश्छन्नः' इति तमोवि[12]गमादस्य विज्ञानमुपजायत इति।

§४. अथ किमिदं तमः ?। रागादय इति चेत्—न, तेषां प्रकृतिधर्मत्वात्। न च[13] साम्यावस्थायां तदुत्तरकार्यभाविनः प्रकृतावपि ते सन्ति। शक्तिरूपतया सन्तीति चेत्; शक्तिरपि न का[14]र्यकार्यं करोति। किन्तु स्वकार्यमेव करोति। न हि क्षीरे दधिशक्तिः दधि-25 साध्यं कार्यं करोति। किन्तु दध्येव करोति। दधि पश्चात् स्वकार्यं करोति। पश्चाद्भवन्तु, तथापि रागादयः सिद्धा इति चेत्, न, प्रधानस्य विकार[15]जनने सहकारिकारणाभावेन तेषां पश्चादप्यसिद्धेः।

§५. सन्तु वाऽविचारारागादयः, ते मुक्तात्मनः किं न तमो भवन्ति। अधिकारिण एव ते भवन्ति, न मुक्तात्मन इति चेत्; किमिदम् अधिकारित्वम् ?। [16]योग्यत्वमिति ब्रूमः। 30 तथा हि—प्रकृतिरचेतना भोग्यरूपा। सा भोक्तारमपेक्षते। पुरुषोऽपि चेतनो भोक्ता च। स

---

१. यदा ज्ञान° मु०। २. भवेत् च०। ३. सयोग- अ०। ४. °पाहं मदीयं मु०। ५. मदीयं कर्म° अ०। ६. नीव निर्ज्ञात क०। ७. अथेदम मु०। ८. °गमाद्वा मु०। ९. °मपि किं सं° मु०। १०. °ऽपि सदा अ०। ११. सर्वेषां मुक्ति- अ०। १२. तमो विरामाद° क०। तमो विरामेऽवश्य विज्ञा° मु०। १३. न साम्या° अ० मु०। १४. न कार्यं क०। १५. विकाराज° मु०। १६. इतः आरभ्य 'योग्यतालक्षण.' इतिपर्यन्तः पाठः मु० क० प्रतो. 'सन्ति' [ पृ० ४४ पं० ...... ] इत्यनन्तरं वर्तते सं०।

च भोग्यमपेक्षते। तयोरय योग्यताल्लक्षण सबन्धो वनगतयोरिव पङ्ग्वन्धयोर्ग्राम निर्जिगमिष्वोरिति[1]। ननु सा योग्यता तयोर्नित्या न कदाचिन्निवर्तेत[2]। ततो न कदाचित् ज्ञानोत्पत्तिरिति। तदाह—न तदुद्भव इति। न तस्य ज्ञानस्योद्भव उत्पत्ति[3] स्यादिति। न चाप्रच्युतानुत्पन्नस्थिरैकरूपस्यात्मन स्वभावविगमो युक्तिमानिति न तस्य प्राग्वत् केवलज्ञान प्रमाणमिति स्थितम्[4]। [९[5]]

§१ निरस्ते दुर्मतध्वान्ते जिनार्कोदयकाङ्क्षिणा।
इदानीमुदयोपायस्तस्यायमभिधीयते॥

—कालवैपुल्येत्यादि—

**कालवैपुल्ययोग्यत्वकुशलाभ्याससंभवे॥ ९॥**
**आवृतिप्रक्षयाज्ज्ञान सार्वज्ञ्यमुपजायते।**

§२ तथा हि—

जीवस्वाभाव्यत सिद्धा गुणा गम्भीरतादय।
चरमे पुद्गलावर्ते भव्यत्वे पाकमागते॥
रत्नत्रयस्य कुशलमथाभ्यासवत क्रमात्।
ज्ञानावृतिक्षयाज्ज्ञानमर्हतो[11] जायतेऽक्षयम्॥ [१०[5]]

§१ शरीराद्भिन्नमात्मान प्रत्यक्ष नैव वीक्षते।
प्रामाण्य नानुमानस्य सर्वमेतदसंगतम्॥
नानुमान प्रमेत्येतद्वचन चार्वाकचर्चितम्। किं प्रमाणमथाप्रमाण [?]।

अप्रमाण कथमनुमाननिषेधायालम् [?]। प्रमाणमपि नाध्यक्षम्, अनक्षजत्वात्। अथानुमानम्। तदेतत् पीतमद्यस्य प्रलपितम्। प्रतिपादयिष्यतेऽनुमानप्रामाण्य प्रमाणद्वित्वसिद्धाविति। तदेवोपन्यस्यन्नाह—संदेहेतुकमित्यादि—

**सदहेतुकमस्तीह सदैव क्ष्मादितत्त्ववत्॥ १०॥**

§२ अनेन प्रयोगार्थो दर्शित। प्रयोगश्च—यत् सदहेतुक तत् सर्वदा अस्ति। यथा पृथिव्यादितत्त्वम्। सदहेतुक च आहाराद्यासक्तिचैतन्यपर्याय जीवद्रव्यमिति। [१०]

§१ एतत् साधयितुमनुमानमाह—आहारासक्तीत्यादि—

**आहारासक्तिचैतन्य जन्मादौ मध्यवत्तथा।**

§२ इह आहारग्रहणमुपलक्षणम्। इह चेतसो यन्नामक्ति सा तदभ्यासपूर्विका। यथा यौवनादि। यौवनावस्थाया रागाद्यासक्तिचित्त तदभ्यासपूर्वम्। अस्ति च जन्मादावाहाराद्या-

१ °पयोर्ग्राम° अ० य०। २ °मिष्योरिति क०। ३ °दपि निवर्तते न कदा° मु०। ४ उत्पत्ति। न चा° य०। ५ °तस्ते भि° अ०। ६ भिति मु०। ७ निरस्तकु° क० मु०। ८ कुमुदध्वा मु०। ९ धक्षिण मु०। १० °दय यस्य तस्या मु०। ११ छिन्ने° क०। १२ महते जा° अ० य०। १३ चर्चितम् मु०। १४ °यस्तथाह अ० य०। १५ सद्धेतु° मु०। १६ °थ्यादिव मु०। १७ सद्धेतु° मु०। १८ यौवनावस्था° मु०।

सक्तिचैतन्यमिति कार्यहेतुः । तत्क्षणजातस्यापि स्तनपान-शरीररक्षाद्युपलब्धेर्नासिद्धता हेतोः । सपक्षे सत्त्वान्न विरुद्धता । कार्यकारणभावसिद्धेर्नानैकान्तिकता । अनुगमस्य भावात् सदास्तित्वमात्मन इति ।

§ ३. अथ कार्यकारणभावाव्यवस्थानात् कथमेतत् ? ।

5 तथा हि—

"धूमो धूमान्तरोत्पन्नो न धूमादेव सर्वथा ।
शालूकादपि शालूकः कथं भवति गोमयात् ? ॥"

तथा—

"चित्रं चित्रकराज्जातं पतत्रिष्वपि किं तथा ? ।
10 तथाभ्यासाद्विशेषो यः सोऽन्यथाऽपि भविष्यति ॥"

§ ४. तदसत् ।

"धूमो धूमाद्यथाभूतः सोऽन्यथाऽपि न जायते ।
अभ्यासात्तु विशेषो यः स जन्मादौ तथा स्थितः ॥"

ग्रामान्तराभ्यासवज्जन्मान्तराभ्यासानुपलब्धेर्न तत्कारणता चैतन्यस्य, किन्तु तदैव तस्यो-
15 पलब्धेः । तस्मात् तदैव तदिति चेत् । तदेतद्भौताख्यानम्—

"कश्चिद्भौतः किलान्येन पृष्टः कथय संभवः ।
मातुर्दीर्घविषाणस्य महिषस्य कथं स्थितेः ।
स प्राह कुक्षेर्जायन्ते न मातुर्महिषा अमी ॥
हट्टागतानामेवैषां मूल्येन क्रयमात्रकम् ।
20 न च मातापितृचैतन्यजन्यत्वेन चेतसः ॥"

सिद्धता वाच्या । अन्यथा सकलस्य पाण्डित्यादिविशेषस्याप्यनुवर्तनं स्यात् । न चेहान्यस्य संस्कारोऽन्यस्य दृष्टः । उपाध्यायसंस्कारानुवर्तनमुपलभ्यत इति चेत्; न, स्वसंतानपूर्व-विज्ञानस्यैवाभिरुचिविशेषितस्य भावाद् अन्यथाऽदृष्टेः । ये चाचेतनात् काष्ठादेरुपजायन्ते तेषां कथं मातापितृचैतन्यपूर्वकत्वम् ? ।

25 § ५. किञ्च—तत्र कस्यचिन्मरणाभावात् सकलमातापितृस्वभावानुवर्तनं स्यात् । परलो-किनस्तु मरणगर्भजन्मदुःखसमुद्घातव्याकुलत्वेन कस्यचिदेव दृष्टेः । कस्यचित्तु जातिस्मर-णमुपलभ्यते । अपूर्वोत्पन्नस्य तु सैवावस्थितिर्न दुःखम् ।

"तदैव तत्रोत्पन्नस्य न दुःखं विषकीटवत् ।
परलोकिनस्तु तद्दुःखमनाद्यभ्याससेवनात् ॥"

30 § ६. "अथ देहात्मिका देहकार्या देहस्य च गुणो (र्यां देहगुणो) मतिः ।
मतत्रयमिहाश्रित्य न परलोकस्य संभवः ॥"

---

१. सदा नित्य° अ० व० । २. सालूका° अ० व० । ३. सालूक. अ० व० । ४. °न्येन सृष्टः कथमसंभव' मु० । ५. वृषभस्य क० मु० । ६. °मेवैषा शुल्येन क्रयविक्रयमात्रकम् मु० । ७. क्रयविक्र-यमा° क० । ८. न च मातृपि° क० । न मातृपि मु० । न मातापि अ० व० । ९. सिद्धसाध्यता वाच्या क० मु० । १०. °स्य व्यापिलावि° मु० । ११. °न्यसस्का° क० मु० । १२. स्वसंतानस्य पूर्व° क० मु० । १३. किञ्च कस्य° क० मु० । १४. °मरणभावात् क० मु० । १५. परलौकिकस्तु क० मु० । १६. °चिजाति° क० मु० । १७. चैतन्यम् अ-टि० ।

तथा हि—न धूमो धूमध्वजान्तरादागच्छति । नापि धूमध्वजान्तरं प्रयाति । नापि धूमध्वजविरहे भवति । चित्रं वा न कुड्यान्तरादागच्छति, कुड्यान्तरं वा सङ्क्रामति, कुड्यविरहेण वाऽवतिष्ठते, मदशक्तिर्वा कषायादेः सशर्करात्पूर्वा जायमाना न मद्यान्तरमवलम्बते, मद्यान्तराद्वा आगच्छति, तद्विलये वाऽवतिष्ठते ।

§७ तदसत् । महाभूतपरिणामरूपस्य चैतन्यकारणत्वे सर्वं स्तम्भकुम्भादि सचेतनं स्यात् । अथ महाभूतसंभविनोऽपि रत्नान्यो न सर्वत्र भाविनः, तद्वत् कश्चिदेव महाभूतपरिणतिविशेषश्चैतन्यहेतुः । तदप्यसत् । यतः —

"न स कश्चित् पृथिव्यादेरंशो यत्र न जन्तवः ।
संस्वेदजाद्या जायन्ते सर्वे बीजात्मकं ततः ॥"

अथ यदि न महाभूतकार्याः प्राणिनः कथं काष्ठाद्यन्वयिनी प्राणिजातिरुपलभ्यते ? । तन्न, यतः समानजातीयं सर्वं तद्रूपप्राणिमयं स्यात् । न चैवम् । तथा हि—परिश्राव्य स्थापितेऽम्भसि सकलतद्रूपप्राणिगणोत्पत्तिः स्यात् । कुतो वर्णसंस्थानवैलक्षण्यम् ? ।

"तथा हि रक्तशिरसः पीतकायादयोऽपरे ।
जलादिप्राणिनो दृष्टाः स आकारः कुतो भवेत् ? ॥
तद्रूपबीजात् कमलादिभेदः, किं दृष्ट एषोऽनियतः कदाचित् ।
न प्राणिभेदो नियतोऽस्ति बीजात्, सर्वत्र कर्माणि नियामकानि ॥"

§८ न च चैतन्यादुत्पद्यमानमुपलभ्यमन्यदपि शरीरादुत्पद्यत इति वाच्यम् । सर्वत्र कार्यकारणभावोच्छेदप्रसक्तेः । तथा च सति—

"नित्यं सत्त्वमसत्त्वं वाऽहेतोरन्यानपेक्षणात् ।
अपेक्षातो हि भावानां कादाचित्कत्वसंभवः ॥" [प्रमाणवा० ३ ३४]

§९ किञ्च—तदुत्पद्यमानं चैतन्यं किं समस्तादुत्पद्यते, व्यस्ताद्वा ? । न तावत् समस्तात्, अङ्गुल्यादिच्छेदेऽपि मरणप्रसङ्गात्, अन्यथा शिरश्छेदेऽप्यमरणप्रसक्तेः । नापि व्यस्तात्, एकस्मिन्नेव कायेऽनेकचैतन्योत्पत्तिप्रसङ्गात् । अथैकः शरीरावयवी ततः एकमेव चैतन्यमुत्पद्यते । तदप्यसत् । आवृतानावृतत्वेन, रक्तारक्तत्वेन, चलाचलत्वेन च तस्यासंभवात् ।

§१० किञ्च—शरीरस्यावैकल्यात् मृतशरीरेऽपि चैतन्योत्पत्तिः स्यात् । अथ वातादिदोषवैगुण्यात् न मृतशरीरस्य चैतन्योत्पादकत्वम् । नैतत् सारम् । यतो मृतस्य समीभवन्ति दोषाः, ततो देहस्यारोग्यलाभात् पुनरुज्जीवनं स्यात् ।

"तेषां समत्वमारोग्यं क्षयवृद्धी विपर्ययः ।"

इति वचनात् । अथ समीकरणं दोषाणां कुतो ज्ञायते ? । ज्वरादिविकारादर्शनात् । अथ वैगुण्यकारिणि निवृत्तेऽपि नावश्यं तत्कृतस्य वैगुण्यस्य निवृत्तिः । यथाऽग्निनिवृत्तावपि न

---

१ धूमान्तरा० क० मु० । २. गच्छति मु० । ३ तद्विगमे मु० । ४ °दवे तदप्यसत् । यत मु० । ५. तदपरं महाभाविनः तद्वत् क० । ६ न कश्चित् अ० क० मु० । ७ तद्बीजा° क० मु० । ८. परिताप्य मु० । ९ स्थाप्यतेऽम्भसि ख० मु० । १० रक्त शि° अ० ब० । ११ दृष्टे बाले° क० । १२. सर्वत्र मु० । १३ °यथा च° मु० । १४ अङ्गुल्यादेवालि° अ० । १५. कुतो ज्ञायते ख० ।

काष्ठे[1] दूरदाहस्याऽपि । तदपि न, यतः किंचित् क्वचिदनिवर्त्त्यविकारारम्भकं दृष्टम्, यथा काष्ठेऽग्निः । क्वचिच्च निवर्त्त्यविकारारम्भकम्, यथा सुवर्णे द्रवतायाः । तत्र यदि दोषविकारोऽनिवर्त्त्यः स्यात्, चिकित्साशास्त्रं वृथैव स्यात् । ततो दौर्बल्यादिविकारस्येव महतोऽपि मरणविकारस्य निवृत्तिः प्रसज्येत[2] । अथ चिकित्साप्रयोगाद्दौर्बल्यादिनिवृत्त्युपलब्धेः प्रत्या-
५ नेयविकारत्वम्, असाध्यव्याध्युपलब्धेश्चाप्रत्यानेयविकारत्वं चेत्युभयथाभावात् मरणा-निवृत्तिः । तदसत् ।

"दुर्लभत्वात् समाधातुरसाध्यं किंचिदीरितम् ।
आयुःक्षयाद्वा दोषे[3] तु केवले नास्त्यसाध्यता ॥"

तथा हि—तेनैव व्याधिना कश्चित् म्रियते, कश्चिन्नेति । नेदमसमञ्जसं केवले दोषे[4]
१० विकारकारिणि घटते । तस्मात् कर्माधिपत्यमेवात्र परिहारः । अन्यथा—

"मृते विषादिसंहारात् तद्दंशच्छेदतोऽपि वा ।
विकारहेतोर्विगमे स नोच्छ्वसिति[5] किं पुनः ॥"

§ ११. किञ्च—उपादानविकारमन्तरेण नोपादेयस्य विकारो दृष्टः, यथा मृद्विकारमन्तरेण न कुण्डस्य । इह तु स्वच्छेऽपि[6] देहे भयशोकादिना मनोविकारदर्शनात् न देहस्योपादानता ।
१५ शरीरविकारेणापि चेतसो विकारोपलब्धेः तदुपादानमिति चेत्; न, पुत्रेण व्यभिचारात् । नियमाभावाच्च । यथा हि चित्तविकारमन्तरेण नोत्तरचेतसो विकारो नैवं शरीरे[7] नियमः । अवस्थाकारणं तु स्यात् ।

"अवस्थाकारणं वस्तु[8] नैवोपादानकारणम् ।
अवस्थाकृन्निवृत्तौ हि सैवावस्था निवर्तताम् ॥
२० सन्तानकारणं यत्तु तदुपादानकारणम् ।
तन्निवृत्तौ भवेत्तस्य सन्तानस्य निवर्तनम् ॥
अग्नेर्निवृत्तौ ताम्रस्य[9] द्रवतैव निवर्तते ।
चेतसः[10] सह कायेन तावत्कालमवस्थितिः[11] ॥
अन्योऽन्यसहकारित्वादग्निताम्रद्रवत्ववत्[12] ।
२५ तयोर्हेत्वोरकार्यं[13] तु "भिन्नं तिष्ठति[14] हेमवत् ॥"

तच्चित्तमेव चेतस उपादानम्, न शरीरमिति ।

§ १२. नापि चक्षुरादीनि, यतो मनःसमाश्रितान्येव चक्षुरादीन्युपलभ्यन्ते, न मनस्तदाश्रितम् । यस्मान्नियमेन भयशोकक्रोधादिनोपहते मनसि चक्षुर्विकारो दृश्यते । न तु सात्त्विकानां चक्षुरादिविकारेऽपि मनोविकारः । कादाचित्कस्तु मनसो विकारः पुत्रेन्द्रिय-
३० विकारेऽपि पितुरुपलब्धे[15] इति । न ततो व्यभिचारः । न च यथाग्नेर्विकारमासाद्य[16] घटादिवस्तु तत एव नोत्पद्यते तथेन्द्रियाणीति वाच्यम् । यतः—

"घटादिरन्यथा दृष्टस्ततो न तत एव सः ।
नान्यथा तु पुनर्दृष्टमिन्द्रियं तद्विकारतः ॥"

---

१. काष्ठात् दाह° मु० । २. प्रसज्यते च० । ३. वातादिदोषवैषम्यादसाध्य मु० । ४. केवलदो° च० । ५. °च्छ्वसति अ० मु० । ६. इह स्वच्छे अ० । ७. शरीरम् अ-टि० । ८. °कारण यत्तु तदुपा° मु० । ९. °त्तौ हेम्नस्तु द्रव° मु० । १०. पूर्वार्धेन हेतुनिवृत्तौ निवृत्तिमुक्त्वा हेतुसद्भावे युगपत्सत्तामाह—य-टि० । ११. यावत् देह-कर्मवासितं चेतश्च—च-टि० । १२. कुत. च-टि० । १३. तयोर्हेत्वोर° मु० क० । १४. तु चित्तं तिष्ठ° मु० । १५. °लब्धेरिति मु० । १६. मासाद्य घटा° मु० ।

§ १३ किञ्च, चक्षुरादिभ्यः किमेकैकस्मो मनोविज्ञानमुत्पद्यते, समस्तेभ्यो वा ?[1] । प्रथमपक्षे नियतविषयमेव मनोज्ञानं स्यात् रूपादिदर्शनादिवत् । द्वितीये तु नान्धबधिरादेर्मनोविज्ञानं स्यात् । न हि बीजादिभ्यः समस्तेभ्यः समुत्पद्यमानोऽङ्कुरस्तदेकापायेऽप्युत्पद्यते । तन्न चक्षुरादिकार्यता ।

§ १४ नापि प्राणापानकार्यता । प्राणापानौ हि मनोविज्ञानान्वयव्यतिरेकानुविधायिनौ ।[2] न मनोविज्ञानं तदन्वयव्यतिरेकानुविधायि । अन्यथा मूर्च्छाविच्छेदे चैतन्यं न स्यात् । तत्कार्यतामन्तरेण मनोज्ञानवश्यता च तयोर्न स्यात् । न ह्यस्वन्याधीनम् अन्येन वशयितुं शक्यम् । अथ अन्यत उत्पन्नोऽपि अन्येन नियम्यते, यथा स्वामिना भृत्यः । तदप्यसत् ।

"भृत्यस्यान्यत उत्पत्तिर्दृश्यते न पुनस्तयोः ।
न चित्तमन्तरेणास्ति तयोरुत्पत्तिरन्यतः ॥"[3]

§ १५ अथ स्वापावस्थायां प्राणापानौ चित्तमन्तरेणापि दृश्येते । तत् कथं तत्कार्यौ ? । तन्न । निद्राभिभूतस्य तदाऽपि भावात् ।[4]

"शरीरचेष्टा यावत्यस्ताः सर्वाश्चित्तसमुद्भवाः[5] ।
सुप्तस्य दीर्घह्रस्वादिनिःश्वासाः पूर्वचित्ततः ॥"[6]

न हि चैतन्यमन्तरेण प्रेरणाकर्षणे भवतः । न च प्रेरणाकर्षणे एव चैतन्यात् न प्राणापानाविति ।[7] तत्स्वरूपव्यतिरेकेण प्रेरणाकर्षणयोरभावात् ।

§ १६ अथ स्थिरो वायुः प्राणापानयोर्हेतुः, ततश्चेतना । तदप्यसत् । मृतस्यापि स्थिरो वायुरस्ति इति प्राणापानादिप्रवृत्तौ चैतन्यस्याऽनिवृत्तिः स्यात् । यदि च प्राणापानकार्यं चैतन्यं तदा तयोर्निर्ह्रासातिशये तस्यापि तौ स्याताम् । अवश्यं हि कारणे परिहीयमानेऽभिवर्धमाने वा कार्यस्य हानिरुपचयश्च स्यात् । अन्यथा तत् तस्य कार्यमेव न भवेत् । न चैवम् । अतो[8] न शरीरेन्द्रियप्राणापानकार्यं चित्तम् ।

§ १७ नापि देहाश्रितम् । आश्रयाश्रयिभावप्रतिषेधात् । तथा हि—असतस्तावत् स्वरूपाप्रसिद्धेः नाश्रयः । केवलमसत् कारणादुत्पत्तिमेवेहते, अतोऽसतः कारणमेव स्यात्, नाश्रयः । सतोऽपि सर्वनिराशंसत्वात् न कश्चिदाश्रयः । अथ मतं स्थितिकरणादाश्रयः । न, स्थितेः स्वातुरव्यतिरेके[9] तत्करणे स एव कृतः स्यात् । न च सतः करणम्[10] उक्तस्य पुनरुत्पादायोगात् । अथोत्पन्नस्यापि किञ्चिदनुत्पन्नमस्ति तत्करणादाश्रयः । सर्वोत्पादे कारणमुच्यते, कस्यचित्तु धर्मस्योत्पाद आधारः । न च स्थितिरव्यतिरिक्ता स्वरूपात्, ततोऽपि स्थित्यभावे स्वरूपसद्भावात् । यदि पुनरव्यतिरिक्ता स्थितिः स्यात्, स्थितेरव्यतिरिक्तः स भवेत्, ततः सर्वदा स्थितिरेव भवेत् । तेन स्वरूपे सति निवर्तमाना विरुद्धधर्माध्यासात् ततो व्यतिरिक्ता सा । तदप्यसत् । व्यतिरेके[11] हि सति यद्धेतुरेवासौ, न[12] तस्याधारः ।

१ °च उत्प° मु० । २. °रेकविधायि अ० प० । ३ स्त् प्रदे° अ० प० मु० । ४ निद्राभि° अ० प०, निर्दाभि° प० । ५. °सः स्पाधि° प० मु० । ६ °न्दस्य प्रा° मु० । ७ °पानि° प० । ८. °करण बाधक मु० । ९. °रक तद° मु० । १० टकरण° मु० । ११ आधारोऽनर्थक्यि° अ० प० । १२. °तिरेके हि मु० ।

§ १८. तस्य स्थितिकरणात् तदाधार इति चेत्; किममावुत्पन्ना सती स्थाप्यस्य¹ भवति, अन्यथा वा ? । अनुत्पन्ना असत्त्वान् न तस्य । उत्पन्नाप्यन्यस्मात् कथं भावस्य, तादात्म्य-तदुत्पत्तिसंबन्धाभावात् ? । अथ तत एवोत्पद्यते नान्यतः । तथा मति तत्कार्या स्यात् नाश्रयकार्या । तत्र चोक्तं दूषणम् । तथा हि—स्थाप्येन स्थितिः क्रियते नाश्रयेण । अथ स्थितेः स्थितिः क्रियते आश्रयेण तर्हि अनवस्था स्यात् ।

§ १९. यदि चाश्रयो देहः, तदा यस्य स्थितिकारणमस्ति तस्य न विनाशः स्यात् । अथ तत्स्थापके² सत्यपि नाशहेतोर्नाशः । न नाशो नामाऽन्य एव भावात् । व्यतिरेके च नाश एव तेन कृतः स्यात्, न भावः । ततोऽनाशान स्वयमेवास्त इति किं स्थितिहेतुना ? । यदि च नाशहेतोर्नाशो यावन्नाशको नायाति तावत् स्वयमेवास्त इति किं स्थितिहेतुना ? । अथ विनाशकात् पूर्वं स्थापकेन विनाशप्रतिबन्धः क्रियते । ननु सोऽपि विनाशप्रतिबन्धोऽन्यो विनाश्यात् । ततश्च विनाश्यस्य³ न किंचिदिति विनश्येत् । अथानन्यः, तर्हि विनाश्यः स्थापकेन क्रियते⁴ न स्थितिः । अथ प्रतिक्षणं विनश्वरः स्थापकादन्यथा भवति, तस्यापि विनाशोऽहेतुक इति स एव प्रतिक्षणं विनाशः । स च अन्यथा स्थापकादुत्पन्न इति कारणमेव⁵ स्यात्, न स्थापकः ।

§ २०. अथ पततो धारणोपलब्धेः कथं न स्थापकः ? । न पततो धारणं, यस्य च धारणं न तस्य पतनम्, पतनापतनयोः परस्परविरोधात् । पूर्वं पतनं पश्चादपतनमिति चेत्, न⁶ तर्हि यस्य पतनं तस्य धारणम्, प्रत्यक्षेणैकत्वाप्रतिपत्तेः । न ह्येकोऽवस्थाता पतनेतरन्याप्युपलभ्यते ।

§ २१. स एव पतन्नवतिष्ठत इति एकत्वाभिमानादवस्थातुः प्रतीतिरिति चेत्; न, प्रत्यभिज्ञानस्याभिमानमात्रत्वात् । ततः प्रतिक्षणविनाशिनामपरापरदेशोत्पादवतामुपादानदेशोत्पत्तिरेवं⁷ आधारसमागमकृतेति हेतुरेव विशिष्टावस्थाया आधार उच्यते ।

§ २२. किं च, गुरुणो द्रव्यस्य पततः पातप्रतिबन्धात् स्थापकः स्यादपि, निष्क्रियाणां तु गुणसामान्यकर्मणां किमाधारेण ? । चैतन्यं च सामान्यं गुणः कर्म वा ? तच्च सर्वथा निष्क्रियमिति नाऽधारेणास्य किंचित् । अतोऽनाधेयस्य चेतसो नाधारविनाशेन विनाशः । कियत्कालं तु सहस्थानमात्रमग्नितामद्रवत्ववदित्युक्तम्⁸ । तन्न कायाश्रितं चेतः ।

§ २३. नापि कायात्मकम् । यतः परमाणुसंघातमात्रमेव शरीरम् । तत्तादात्म्ये प्रत्येकं सकलपरमाणुसंवेदनप्रसङ्गः स्यात् । न च अवयव्येको विद्यते तत्सद्भावेऽपि वा श्यामतादिवदन्येन चैतन्यवेदनं स्यात् । अन्तःस्प्रष्टव्यरूपत्वान्नेति चेत्; न, व्रणं स्पृशतोऽन्यस्यापि तद्वेदनावेदनं स्यात् । तच्छरीरे गृह्यमाणे चैतन्याग्रहणाद् विरुद्धधर्माध्यासेन⁹ न तादात्म्यम् । तन्न देहकार्यं देहगुणो देहात्मकं वा चैतन्यं किन्तु जन्मान्तरचैतन्योपादानमेव । जन्मादिजन्यचैतन्यपर्यायं जीवद्रव्यमिति ।

---

१. स्थाप्या भवति मु० । २. अथ स्थापके क० मु० । ३. विनाशस्य अ० च० । ४. स्थापकेन न स्थितिः अ० च० । ५. करण° मु० । ६. चेत् तर्हि मु० । ७. °शोत्पत्तिराधार° क० मु० । ८. °मात्र-कमग्नि° क० मु० । ९. °ध्यासेन तादा° मु० ।

§२४ अथ कथं परलोकशरीराच्छरीरान्तरसंचारः [1] । वृद्धादिशरीराश्वासप्रचारवत् । अथैकोपादानभावेन तदेकत्वात् न शरीरान्तरम् । पश्वादिशरीरं तु नैवम् । तदपि स्वप्नान्तिकशरीरसंचारदर्शनात् अनैकान्तिकम् । किं च, शरीरान्तरे मनःसंक्रान्तिः कथञ्चित् तद्ग्राहकत्वेनैव, नान्यथा । सा चेह पश्वादिशरीरेष्वप्युपलभ्यते । तत् कथं न शरीरान्तरसंचारोपलब्धिः [2] । अथ ग्राहकतामात्रे संचारे परशरीरवत् स्वशरीरक्षतावपि न व्याकुलतादयः स्युः [3] । तदप्यसत् । पररक्तादिदर्शनेऽपि केषाञ्चित् व्याकुलितोपलब्धेरात्मशरीरक्षतावपि केषाञ्चिदभावात् । तदनेकजन्मपरंपरावासनादाढ्यादात्मीयग्रहसद्भावे व्याकुलतादयः प्रवर्तन्त इति ।

§२५ अथ भवतु कार्यादतीतपरलोकानुमानम्, भाविनस्तु कथं ?, तदर्थं च दानादिक्रियेष्यते [4] । तदपि यत्किंचित् । सिद्धे हि [5] कार्यकारणभावे, यथा कार्यात् कारणानुमानम्, तथाऽविकलकारणात् कार्यस्यापि इत्यनैकान्तिकत्वादिदूषणं नैव संभवति ।

"कार्यकारणसद्भावात् चैतन्येनान्यचेतसः" इति ।
"एवं क्षणिकपर्यायपरिणामिनि संस्थिते ।
गुणाः प्रकर्षमायान्ति कालेन सहकारिणा" ॥ [११[1]]

ॐ

§१ इति निगदितमेतत् केवलज्ञानहेतुः, कुशलमखिलजन्तोर्ज्ञानचारित्रदृष्टिः ।
सकलमलविहीनं साधनं तस्य सिद्धौ, कथयितुमिदमन्यद् वार्तिककृद् आह कर्ता ॥

ॐ

अन्त्यसामग्र्यवद्धेतुरित्यादि—

अन्त्यसामग्र्यवद्धेतुः संपूर्णः कार्यकृत् सदा ॥ ११ ॥
ज्योतिःसाक्षात्कृतिः कश्चित् संपूर्णस्तत्त्ववेदने ।

§२ हेतुः कारणकलापः । संपूर्ण इति अविकलः । स हेत्ववश्यमेव कार्यकारी । अन्यथा कार्योत्पत्तिर्न कदाचित् स्यात् । अन्त्यसामग्र्यवदिति व्याप्तिविषयोपदर्शनम् । (सर्वज्ञसिद्धि ।) कश्चिद् विवादाध्यासितः तत्त्वज्ञानोत्पत्तौ ग्रहोपरागादिसाक्षात्कारित्वादविकलकारण इति । प्रयोगश्च—यदविकलकारणं तदवश्यमेव कार्यमुत्पादयति । यथा अन्त्या कारणसामग्री । अविकलकारणश्च तत्त्वज्ञानोत्पत्तौ अतीन्द्रियग्रहोपरागादिसाक्षाद्द्रष्टा तज्जातीयेष्वतीन्द्रियेषु जीवादिषु कश्चिदिति । हेतुमेव समर्थयितुमाह—यस्य यज्जातीयाः पदार्थाः प्रत्यक्षाः, तस्याऽसत्यावरणे तेऽपि प्रत्यक्षाः । यथा घटसमानजातीयभूतलप्रत्यक्षत्वे घटः । प्रत्यक्षाश्च कस्यचिदतीन्द्रियजीवादिपदार्थसजातीयग्रहोपरागादयो भावा इति । न तावदयमसिद्धो हेतुः । यतो यो यद्विषयानुपदेशालिङ्गाविसंवादिवचनरचनानुक्रमकर्ता स तत्साक्षात्कारी । यथास्मदादिरात्मीयानुभववचनरचनानुक्रमकर्ता । ग्रहोपरागादिग्रन्थकर्ता च सः, तस्मात् साक्षात्कारीति । न चापौरुषेयत्वेनाभिद्धत्वमभिधानीयम्, तस्य पूर्वमेव निरस्तत्वात् ।

---

१ तदपि स्वप्नान्तिकशरीर० मु० । २. °क्रान्ति तद्ग्रा अ० ब० । ३ °दय । तद° अ० ब० । ४ सदानक क० मु० । ५ सिद्धे कार्य अ० ब० । ६ कारिताकि° क० मु० । ७ कारणमिति क० मु० । ८ कस्याप्यतीन्द्रि° क० मु० । ९ तज्जातीयेषु जीवा° क० । १० तावदय सि° मु० । ११. देशलिङ्ग क० । १२ ग्रहोपरागादिग्रन्थकारी तत्साक्षात्कारी ग्रा° क० मु० ।

सर्वज्ञवादे मीमांसकस्य पूर्वपक्षः ।

§३. ननु अनुमानबाधितेयं प्रतिज्ञा । तथा हि—देशान्तरे कालान्तरे च यद्रूपं तदिदानींतनचक्षुर्जनितप्रत्यक्षसमानजातीयप्रत्यक्षग्राह्यम्, रूपशब्दवाच्यत्वाद् इदानींन्तनरूपवदिति । एवं रसादिष्वपि पञ्चानुमानानि भवन्ति । तथा यच्चक्षुर्जनितं प्रत्यक्षं तद्देशान्तरादावपि नियतदेशकालरूपग्राहकं प्रत्यक्षशब्दवाच्यत्वाद्, इदानींतनरूपप्रत्यक्षवदिति । एवं शेषेन्द्रियप्रत्यक्षेष्वपि पञ्चानुमानानि भवन्ति । तदुक्तम्—

"यज्जातीयैः प्रमाणैस्तु यज्जातीयार्थदर्शनम् ।
दृष्टं संप्रति लोकस्य तथा कालान्तरेऽप्यभूत् ॥" [ श्लोक० २.११३ ]

इति न च गृध्रादिभिर्व्यभिचारो वाच्यः । तेऽपि न स्वार्थमुल्लङ्घ्य वर्तन्ते । तदुक्तम्—

"यत्राप्यतिशयो दृष्टः स स्वार्थानतिलङ्घनात् ।
दूरसूक्ष्मादिदृष्टौ स्यात् न रूपे श्रोत्रवृत्तितः ॥" [ श्लो० २.११४ ]
"येऽपि सातिशया दृष्टाः प्रज्ञामेधाबलैर्नराः ।
स्तोकस्तोकान्तरत्वेन न त्वतीन्द्रियदर्शनात् ॥
प्राज्ञोऽपि हि नरः सूक्ष्मानर्थान् द्रष्टुं क्षमोऽपि सन् ।
संजातीयानतिक्रामन्नतिशेते परान् नरान् ॥" इति [ तत्त्वसं० का० ३१६०,६१ ]
"एकशास्त्रविचारेषु दृश्यतेऽतिशयो महान् ।
न तु शास्त्रान्तरज्ञानं तावन्मात्रेण लभ्यते ॥
ज्ञात्वा व्याकरणं दूरं बुद्धिः शब्दापशब्दयोः ।
प्रकृष्यते, न नक्षत्रतिथिग्रहणनिर्णये ॥
ज्योतिर्विच्च प्रकृष्टोऽपि चन्द्रार्कग्रहणादिषु ।
न भवत्यादिशब्दानां साधुत्वं ज्ञातुमर्हति ॥
तथा वेदेतिहासादिज्ञानातिशयवानपि ।
न स्वर्गदेवताऽदृष्टप्रत्यक्षीकरणक्षमः ॥
दशहस्तान्तरं व्योम्नो यो नामोत्प्लुत्य गच्छति ।
न योजनमसौ गन्तुं शक्तोऽभ्यासशतैरपि ॥
तस्मादतिशयज्ञानैरतिदूरगतैरपि ।
किञ्चिदेवाधिकं ज्ञातुं शक्यते न त्वतीन्द्रियम् ॥"
[ तत्त्वसं० का० ३१६४-३१६९ ]

इति । तत् स्थितमनुमानबाधितेयं प्रतिज्ञेति ।

§४. तथा, अभावप्रमाणबाधिता । तथा हि—प्रत्यक्षानुमानागमोपमानार्थापत्त्यभावेऽभावप्रमाणमेव विजयते । तदभावमेव दर्शयितुमाह—

"सर्वज्ञो दृश्यते तावन्नेदानीमस्मदादिभिः ।
दृष्टो न चैकदेशोऽस्ति लिङ्गं वा योऽनुमापयेत् ॥
न चागमविधिः कश्चिन्नित्यः सर्वज्ञबोधकः ॥"
[ तत्त्वसं० का० ३१८६,३१८७ ]

§५. "वेदाहमग्रे पुरुषं महान्तमादित्यवर्णं तमसः पुरस्तात् । तमेव विदित्वा मृत्युमत्येति नान्यः पन्था विद्यते अयनाय" इति । तथा, "विश्वतश्चक्षुरुत विश्वतो मुखो, विश्वतो बाहुरुत विश्वतः पात् । संबाहुभ्यां धमति संपतत्रैर्द्यावाभूमी जनयन् देव

१. मनुष्यजातिमातिक्रमी प्रकृतिरदिव्यचक्षुरविलक्षणा, च-टि० । २. °न्तराद्व्यो° अ० ब० । ३. प्रत्यक्षाद्यभावम्, च-टि० । ४. विदित्वातिमृ° मु० ।

एक आस्ते" इत्यादेर्विद्यमानत्वात्, इति चेत्, न, स्तुतिमात्रत्वात् एतेषां न प्रामाण्यमिति ।

तथा चाह–

"न च मन्त्रार्थवादानां तात्पर्यमवकल्प्यते ।
न चान्यार्थप्रधानैस्तैस्तदस्तित्वं विधीयते ॥
न चानुवदितुं शक्यः पूर्वमन्यैरबोधितम् ।
अनादिरागमस्यार्थो न च सर्वज्ञो नादिमान् ॥"
"कृत्रिमेण त्वसत्येन स कथं प्रतिपाद्यते ॥
अथ तद्वचनेनैव सर्वज्ञोऽन्यैः प्रतीयते ॥
प्रकल्प्येत कथं सिद्धिरन्योन्याश्रययोस्तयोः ।
सर्वज्ञोक्ततया वाक्यं सत्यं तेन तदस्तिता ॥
कथं तदुभयं सिद्ध्येत् सिद्धमूलान्तरादृते ।
असर्वज्ञप्रणीतात्तु वचनान्मूलवर्जितात् ।
सर्वज्ञमवगच्छन्तः स्ववाक्यात् किं न जानते ? ॥"
[ तत्त्वस० का० ३१८७–३१९० ]

"सर्वज्ञसदृशं किंचित् यदि पश्येम संप्रति ।
उपमानेन सर्वज्ञं जानीयाम ततो वयम् ॥" [ तत्त्वस० का० ३२१५ ]

"उपदेशो हि बुद्धादेर्धर्माधर्मादिगोचरः ।
अन्यथा नोपपद्येत सर्वज्ञो यदि नाभवत् ॥" [ तत्त्वस० का० ३२१७ ]

"बुद्धादयो ह्यवेदज्ञास्तेषां वेदादसंभवः ।
उपदेशः कृतोऽतस्तैर्व्यामोहादेव केवलात् ॥" [ तत्त्वस० ३२२४ ]

"येऽपि मन्वादयः सिद्धाः प्राधान्येन त्रयीविदः ।
त्रयीविदाश्रितग्रन्थास्ते वेदप्रभवोक्तयः ॥" [ तत्त्वस० ३२२८ ]

तदेवम्–

"प्रमाणपञ्चकं यत्र वस्तुरूपे न जायते ।
वस्तुसत्तावबोधार्थं तत्राभावप्रमाणता ॥" [ श्लोक० अभाव० १ ]

§ ६ तथोपमानबाधिता । तथा हि–

"नरान् दृष्ट्वा त्वसर्वज्ञान् सर्वानेवाधुनातनान् ।
तत्सादृश्योपमानेन शेषासर्वज्ञसाधनम् ॥" [ तत्त्वसं० का० ३२१६ ]

इति । तदेवमनुमानाभावप्रमाणोपमानबाधितेयं प्रतिज्ञेति ।

§ ७ भवतु वा, तथापि निष्फला । तथा हि–

"समस्तावयवव्यक्तिविस्तरज्ञानसाधनम् ।
काकदन्तपरीक्षावत् क्रियमाणमनर्थकम् ॥
यथा च चक्षुषा सर्वान् भावान् वेत्तीति निष्फलम् ।
सर्वप्रत्यक्षदर्शित्वप्रतिज्ञाप्यफला तथा ॥
स्वधर्माधर्ममात्रज्ञसाधनप्रतिषेधयोः ।
तत्प्रणीतागमग्राह्यहेयत्वे हि प्रसिध्यतः ॥

१ जानीयमहतो क० मु० । २. सर्वज्ञमन्यं कश्चित् यदि दृश्येत संप्रति । तदा गम्येत सर्वज्ञसद्भाव उपमाबलात् ॥ तत्त्वस० । ३. ये हि तावद्वद° तत्त्वस० । ४ सम्प्रयन्थानां° तत्त्वस० । ५ °धापने ज० ब० । ६ येधन मु० ।

तत्र सर्वजगत्सूक्ष्मभेदज्ञत्वप्रसाधने ।
अस्थाने क्लिश्यते लोकः संरंभाद् ग्रन्थवादयोः ॥"
[ तत्त्वसं० ३१३८-३१४१ ]

"एतच्च फलवज्ज्ञानं यावद्धर्मादिगोचरम् ।
न तु वृक्षादिभिर्ज्ञातैरस्ति किञ्चित् प्रयोजनम् ॥" [ तत्त्वसं० ३२०३ ]
"क्रत्वर्थाः पुरुषार्थाश्च यावन्तः खदिरादयः ।
सर्ववृक्षज्ञता तावत् तावत्स्वेव समाप्यते ॥
लताः सोमगुडूच्याद्याः काश्चिद्धर्मार्थहेतवः ।
सिद्धान्तज्ञानमात्रेण लतासर्वज्ञताऽपि नः ॥
व्रीहिश्यामाकनीवारग्रामारण्यौषधीरपि ।
ज्ञात्वा भवति सर्वज्ञो नानर्थकज्ञतान्यपि ॥
तथा कतिपयेष्वेव यज्ञाङ्गेषु तृणेष्वपि ।
दर्भादिषु च बुद्धेषु तृणसर्वज्ञतेष्यते ॥
तृणौषधिलतावृक्षजातयोऽन्याः सहस्रशः ।
विविक्ता नोपयुज्यन्ते तदज्ञानेन नाज्ञता ॥
यत्रापि चोपयुज्यन्ते व्यक्तयो जातिलक्षिताः ।
जातिज्ञानोपसंहारास्तत्रापि व्याप्तिरस्ति नः ॥
अतश्च व्यक्तिभेदानामनभिज्ञोऽपि यो नरः ।
सर्वज्ञत्वफले प्राप्ते सर्वज्ञत्वं न वाञ्छति ॥
जरायुजाण्डजोद्भेदसंस्वेदजचतुर्विधे ।
भूतग्रामेऽल्पकज्ञोऽपि सर्वज्ञफलमश्नुते ॥
पृथिव्यादिमहाभूतसंक्षेपज्ञश्च यो नरः ।
सविस्तरानभिज्ञोऽपि सर्वज्ञान्न विशिष्यते ॥
भूमेर्य एकदेशज्ञो भूमिकार्येषु वर्तते ।
सप्तद्वीपमहीज्ञानं क्व नु तस्योपयुज्यते ॥
तथाल्पेनैव तोयेन सिद्धं तोयप्रयोजनम् ।
तोयान्तराण्यविज्ञाय नाज्ञदोषेण युज्यते ॥
वह्नेश्चानन्तभेदस्य ज्ञातस्योपासनादिभिः ।
पञ्चभिः कृतकार्यत्वादन्याज्ञानमदूषणम् ॥
शरीरान्तर्गतस्यैव वायोः प्राणादिपञ्चके ।
ज्ञाते शेषानभिज्ञत्वं नोपलम्भाय जायते ॥
व्योम्नश्च पृथुनः पारमज्ञात्वाप्येकदेशवित् ।
न च व्योमानभिज्ञत्वव्यपदेशेन दुष्यति ॥"

§ ८. धर्मकीर्तिनाऽप्युक्तम् –

"ज्ञानवान्मृग्यते कश्चित् तदुक्तप्रतिपत्तये ।
अज्ञोपदेशकरणे विप्रलम्भनशङ्किभिः ॥
तस्मादनुष्ठेयगतं ज्ञानमस्य विचार्यताम् ।
कीटसंख्यापरिज्ञानं तस्य नः क्वोपयुज्यते ॥
हेयोपादेयतत्त्वस्य साभ्युपायस्य वेदकः ।
यः प्रमाणमसाविष्टो न तु सर्वस्य वेदकः ॥
दूरं पश्यतु वा मा वा तत्त्वमिष्टं तु पश्यतु ।
प्रमाणं दूरदर्शी चेदेते गृध्रानुपास्महे ॥" [ प्रमाणवा० १.३२-३५ ]

---

१. एकं च फ॰ अ० च० । २. फलवज्ज्ञान तत्त्वसं० । ३. °तै सर्वै किञ्चित् तत्त्वसं० ।

"धर्मज्ञत्वनिषेधस्तु केवलोऽत्रोपयुज्यते ।
सर्वमन्यद् विजानस्तु पुरुषः केन वार्यते ॥" [ तत्त्वस० का० ३१२८ ]
"सर्वप्रमातृसम्बन्धिप्रत्यक्षादिनिवारणात् ।
केवलागमगम्यत्वं लप्स्यते पुण्यपापयोः ॥
एतावतैव मीमांसापक्षे सिद्धेऽपि यः पुनः ।
सर्वज्ञवारणे यत्नस्तैः कृतं मृतमारणम् ॥
येऽपि चैवं च्छिन्नमूलत्वाद् धर्मज्ञत्वे हते सति ।
सर्वज्ञान् पुरुषानाहुस्तैः कृतं तुषखण्डनम् ॥" [ तत्त्वस० का० ३१४२-३१४४ ]

§ ९ किञ्च, सर्वज्ञे सिद्धेऽपि न प्रतिज्ञातोऽर्थः सिद्ध्यति । तथा हि—

"यत् सत्यं नाम लोकेषु प्रत्यक्षं तद्धि कस्यचित् ।
प्रमेयज्ञेयवस्तुत्वं देशिरूपरसादिवत् ॥
ज्ञातर्यप्राप्यनिर्दिष्टे पक्षे न्यूनत्वमापतेत् ।" [ तत्त्वस० का० ३२२५,३२२६ ]
"यदि बुद्धातिरिक्तोऽन्यः कश्चित् सर्वज्ञतां गतः ॥
बुद्धवाक्यप्रमाणत्वे तज्ज्ञानं क्वोपयुज्यते ।" [ तत्त्वस० ३२२७ ]
"सर्वज्ञो यस्त्वभिप्रेतो न बुद्धत्वेन वाऽपि सः ॥" [ तत्त्वस० ३२२६ ]
"विज्ञायते यतः पक्षः साध्यत्वेनेप्सितो भवेत् ।
यस्त्वीप्सिततमः पक्षः निर्दिश्यात् तस्य साधनात् ॥
यावज्ज्ञेयं जगत्सर्वं प्रत्यक्षं सुगतस्य तत् ।
तैरेव हेतुभिः सर्वैः यद्बुद्ध्यादिरूपवत् ॥
तत्र नैव विशिष्टोऽपि पूर्वस्मादेव भिद्यते ।
विशिष्टग्रहमात्रेण हेतोर्नैव विशिष्टता ॥
शक्त्या हि यदा हेतुः दृष्टान्तानुग्रहेण वा ।
पक्षान्तरेण तुल्यः स्यात् तदा काऽस्य विशिष्टता ? ॥
सत्प्रमेयत्वमित्येतद् यतोऽन्येष्वपि वर्तते ।
साधनं नियमाभावात् तेनाकिंचित्करं हि तत् ॥"
"नरः कोऽप्यस्ति सर्वज्ञः स तु सर्वज्ञ इत्यपि ।
साधनं यत् प्रयुज्येत प्रतिज्ञामात्रमेव तत् ॥
सिसाधयिषितो योऽर्थः सोऽनया नाभिधीयते ।
यस्तूच्यते न तत्सिद्धौ किञ्चिदस्ति प्रयोजनम् ॥
यदीयागमसत्यत्वसिद्धौ सर्वज्ञतोच्यते ।
न सा सर्वज्ञसामान्यसिद्धिमात्रेण लभ्यते ॥
यावद् बुद्धो न सर्वज्ञस्तावत्तद्वचनं मृषा ।
यत्र क्वचन सर्वज्ञे सिद्धे तत्सत्यता कुतः ॥
अन्यस्मिन् हि सर्वज्ञे वचसोऽन्यस्य सत्यता ।
सामानाधिकरण्ये हि तयोरङ्गाङ्गिता भवेत् ॥"
[ तत्त्वस० का० ३२३०-३४ ]

१ निषेधस्तु केवलो° तत्त्वस० । २ °द्विजानान् पुरु° तत्त्वस० ३१२८ । ३ सर्वप्रमातृ° तत्त्वस० । ४ येऽपि विच्छिन्न° तत्त्वस० । ५ यत् सत्र नाम तत्त्वस० । ६ °वस्तुत्वादिभि° मु० । ७ ज्ञान मात्रेऽपि निर्दिष्टे पक्षे° तत्त्वस० । ८ सर्वज्ञ इति योऽभीष्टो न च स प्रतिपादित तत्त्वस० । ९ °भि पूर्वं प० मु० । १० सत्त्वात् प्रमयमि° मु० । ११ साधनं तत्प्रयुज्येतापि तत्त्वस० । १२ प्रतिज्ञा न्यूनमेव तद् तत्त्वस० । १३ यत्° तत्त्वस० । १४ सिद्धे स तत्त्वस० । १५ °सर्वज्ञसिद्धे अ० ब० ।

§१०. "तदेवं¹ दोषदुष्टस्य पक्षस्यास्य न पक्षता।
इदानीं हेतुदोषेण हेतोर्दूषणतोच्यते ॥
वचसोऽपौरुषेयत्वं पूर्वमेव स्थितं यदा।
नग्नमुष्ट्यादिकं नैव कृतं पुंसास्ति किंचन ॥
5 एवं तावदसिद्धत्वमनैकान्तिकता तथा।
पारम्पर्योपदेशेन वचसः संप्रवर्तनात् ॥
असत्यार्थं च तद्वाक्यं तेन हेतोर्विरुद्धता।
एवं सर्वज्ञतासिद्धिः कथञ्चिन्नोपपद्यते ॥" इति।

§११. अत्रोच्यते—

10 "दशोत्पाद्यापि मानानि मीमांसा दोषवाहिनी।
सहैव दशभिः पुत्रैर्भारं वहति गर्दभी ॥
यत्साध्यबाधनायोक्तं प्रमाणदशकं परैः।
प्रामाण्ये तद्विधस्यैषां बह्व स्यादसमञ्जसम् ॥"

तथा हि—

15 "तच्छब्दवाच्यतामात्रं प्रामाण्यं यदि कल्प्यते।
न मानं विधिवाक्यं स्यादीश्वरस्य च सिद्धता ॥
वेदाहमग्रे पुरुषं महान्तमित्यादिवद्वेदवचोऽप्रमाणम्।
तच्छब्दवाच्यत्वसमानभावाद्भूधरादेरपि कर्तृसिद्धिः ॥
संस्थानशब्दवाच्यत्वं यतस्तस्यापि विद्यते।
20 घटवद्बुद्धिमत्कर्ता तेन तत्रापि सिध्यतु ॥
विशेषैः परिहाराय यदि कल्प्येत कश्चन।
नियोगादिस्तदा तस्य दोषाः शास्त्रकृतोदिताः ॥"

§१२. तथा हि—यत् प्रमाणगोचरचारि न भवति तन्न सद्व्यवहृतिपथमवतरति। यथा व्योमोत्पलम्। न भवति च नियोगः प्रमाणगोचरचारीति व्यापकानुपलब्धिः।

नियोग-खण्डनम्।

25 तथा हि—किमसौ स्वतन्त्र इष्यते, परतन्त्रो वा?। न तावत् पटादिपदार्थवत् स्वतन्त्रोऽध्यक्षतः प्रतीयते। नाप्यनुमानात्, तत्सद्भावे लिङ्गाभावात्। न च पुरुषप्रवृत्तिर्लिङ्गम्, तस्याः फलाभिलाषकार्यत्वात्। अन्यथा "स्वर्गकामः" इति फलोपदर्शनं न विदध्यात्। अथ प्रचण्डप्रभुनियोगात् फलाभिलाषमन्तरेणापि प्रवर्तमानो दृश्यते। तन्न, तत्रापायपरिहारस्यैव फलत्वात्। नापि शब्दैकप्रमाणसमधिगम्यता तस्य वाच्या, यतः शब्देन प्रतीयमानोऽसौ 30 किं संबद्धेन प्रतीयते, असंबद्धेन वा?। असंबद्धेन प्रतीतावतिप्रसंगः स्यात्। संबद्धेनापि किं स्वाभाविकसंबन्धात्, साङ्केतिकाद् वा?। प्रथमपक्षे बालगोपालादेरपि प्रतीतिप्रसंगः। नह्याकाशं अनाकाशं कस्यचित्। संकेतोऽपि नियोगे प्रतीतेऽप्रतीते वा?। यद्यप्रतीते तदाऽतिप्रसङ्गः स्यात्। प्रतीतिश्च किं तेनैव शब्देन शब्दान्तरेण वा? तेनैव चेत्, किं संकेतेन?। इतरेतराश्रयत्वं च स्यात्। शब्दान्तरेण चेत्; तदपि शब्दान्तरम् गृहीतसकेतं 35 प्रवर्तते। पुनरपि सङ्केतग्रहः शब्दान्तरेणेत्यनवस्था।

---

१. तदेवं मु०। २. प्रमाण क० मु०। ३. °वाच्यं स्या° मु०। ४. विशेषपरि° अ० ब०। ५. तथापि मु०। ६. व्योमेत्पलम् मु०। ७. सबन्धेन मु०। ८. प्रतीतावप्यति° क०। ९. प्रवर्तेत मु०।

§ १३ किञ्चासावेकोऽनेको वा ? । एकश्चेत्, सर्वपुरुषाणां नियोगं प्रतीत स्यात् । अथ विपर्ययात् न परस्येति चेत्, तथापि पक्षपातादिति समानम् । अनेकश्चेत्, प्रतिपुरुषमसाधारणतया न सङ्केतक्रिया स्यात् । किञ्च, शब्दप्रमाणैकसमधिगम्यतया सत्त्वे आकाशकुसुमस्यापि सत्त्वमासज्येत, विशेषो वा वक्तव्य । न च शब्दप्रवृत्तिमात्रेण सत्त्वं युज्यते । अन्यथा दारा पत्र(ण्ण)गरीत्यादावपि सत्त्वमासज्येत । तन्न कश्चित् स्वतन्त्रो नियोगो वाक्यार्थ प्रतीयते ।

§ १४ परतन्त्रोऽपि किं तत्कार्यतया, तद्धर्मतया वा ? । न तावत् प्रथम पक्षो यत किमसौ यागकार्यं, नियोज्यकार्यं, शब्दकार्यो वा ? । न तावद्यागकार्यं, तस्य तदानीमनिष्पन्नत्वेनाभावात् । नापि पुरुषकार्यं, पुरुषस्य पूर्वमपि सद्भावेन तद्भावप्रसङ्गात् । नापि शब्दकार्यं, तत्र हि न शब्दस्य वाच्य स्यात्, कार्यत्वात् । न च वैदिकस्य शब्दस्य नित्यत्वेन क्रमयौगपद्याभ्या जनकत्व युज्यते । तद्धर्मतायामपि किमसौ यागधर्म, पुरुषधर्म, शब्दधर्मो वा ? । न तावद्यागधर्म, तस्याविद्यमानत्वेन तद्धर्मस्याप्यविद्यमानत्वात् । अविद्यमानविषयत्वे च वाक्य निरालम्बनमपोहमात्रविषयमेव स्यात् । नापि पुरुषधर्म, तथाहि—पुरुषाद्व्यतिरिक्त स्यात्, अव्यतिरिक्तो वा ? । अव्यतिरेके पुरुषस्य सर्वथा निष्पन्नत्वात् न नियोगरूपता स्यात् । नियोगो हि अनुष्ठेयोऽर्थोऽभिधीयते । निष्पन्नस्य चानुष्ठाने नानुष्ठानविरतिर्भवेत् । अथ निष्पन्नस्यापि किंचिदनिष्पन्नमस्ति । तन्न, निष्पन्नानिष्पन्नयोर्विरोधेन तादात्म्याभावप्रसङ्गात् । अथ व्यतिरिक्तः, ननु यावदसौ तस्य धर्म तावदन्यस्य किं न भवति ? । तस्यैवाधारशक्तिर्नान्यस्येति चेत्, सापि किं नान्यस्याऽऽधीयते । ता प्रति तस्यैवाधारशक्तिर्नान्यस्येत्यभ्युपगमेऽनवस्था । न च हेतुफलभावादन्यो व्यतिरेके सम्बन्धोऽस्ति । तद्भावे च न समानकालता । असमानकालयोर्न च धर्मधर्मिभावः । एतच्च शब्दधर्मतायामपि दूषण वाच्यम् ।

§ १५ किञ्च, यद्यसौवस्ति, न पुरुष प्रवर्तेत । न हि कश्चित् निष्पन्ननिष्पादनाय प्रवर्तते । अप्रवर्तकस्य च वाक्यस्य न प्रामाण्यमुपेयते । अथ नास्ति, तथापि न प्रामाण्यम्, अविद्यमानविषयत्वात् । तन्न कश्चित् नियोगो वाक्यार्थतया प्रतीयते ।

§ १६ अथ शब्दाद् 'यागादिविषये नियुक्तोऽहमनेन' इति प्रतीते कथमप्रतीति ? । तथाहि—नियोक्ता शब्दो वेदे पुरुषाभावात् । नियोज्य पुरुषः । यागो विषयः । सकल चैतत् प्रतीयते । तत् कथ प्रतीतावप्यप्रतीति ? । तदसत् । नेयमगृहीतसङ्केतस्य प्रतीतिरुदेति । किं तर्हि ? । येन याग कश्चित् कुर्वाण उपलब्धस्तस्य तत्रैव गृहीतसङ्केतस्य पूर्वदृष्टानुसारेण विकल्पिका बुद्धिरुत्पद्यमाना अन्यापोहविषयैवोत्पद्यते । नातस्तत्त्वव्यवस्था ।

---

१ नियोगप्रतीति क० मु० । २ दार मु० । ३ सत्त्व समासज्येत मु० क० । ४ °तया धर्मतया मु० क० । ५ नियोगकार्यं मु० । ६ सद्भावे तद्भाव° ब० । ७ °विषयत्व वाक्यं क० । ८ नियोगेन हि मु० । ९ °ष्ठाने न विरतिम° ब० । १० °आभिधीयते क० । ११ °रेकसंब° क० मु० । १२ °लयोर्न धर्म° मु० क० । १३ नियोग अ टि । १४ °तते । प्रव° क० मु० । १५ °त्वात् । कश्चित् मु० क० । १६ कथ न प्रतीति अ० ब० । १७ तदैव मु० ।

§ १७. एतेन भावनादयोऽपि वाक्यार्थो निरसनीयाः ।

"इति वाक्यस्य ये वाच्यं नियोगं संप्रचक्षते ।
खरशृङ्गस्य ते तैक्ष्ण्यं नूनं व्यावर्णयन्त्यलम् ॥
विधेरपि[1] विधेयत्वेऽनवस्थैव प्रसज्यते ।
स्वरूपवाचकत्वे तु न स्यादन्यविशिष्टता ॥ 5
विधिवाक्यस्य[2] कृच्छ्रेण विशेष[3]परिकल्पने ।
कैरेव[4] भक्षितः काकैरध्यक्षे येन[5] नेष्यते ॥
नकुञ्जरवराहादिप्रत्यक्षेऽप्यक्ष[6]वीक्षितम् ।
विशेषमाक्षिपन्मूढः कथं नाध्यक्षबाधितः ॥
मनुष्यत्वे सतीत्येवं यदि हेतोर्विशेषणम् । 10
मनुष्यत्वं तदा हेतुः पूर्वस्य स्यादहेतुता ॥
जैमिन्यादिर्विशेषज्ञस्तदा नैव भवेत्तव ।
प्रज्ञोन्मेषस्य चोत्कर्षः क्वनु नाम[7] व्यवस्थितः ॥
स्तोकस्तोकान्तरज्ञत्वं येन पुंसः प्रसाध्यते ।
इन्द्रियान्तरविज्ञानं नेन्द्रियान्तरवस्तुनः ॥ 15
ग्राहकं चेति[8] यो दोषः सोऽतीन्द्रियदृशः कुतः ।
अथातीन्द्रियविज्ञानं न दृष्टं केनचित् क्वचित् ॥
विनेन्द्रियं च वैशद्यं कुतस्तस्य भविष्यति ।
सर्वदेशेषु[9] कालेषु सर्वज्ञो नेति यो[10] वदेत् ॥
तस्य सर्वज्ञता प्राप्ता सिद्धं चासत्समीहितम् । 20
कामादिभावनाजातं विज्ञानं विशदं यदा ॥
तदेन्द्रियसमुत्थत्वं वैशद्ये नोपयोगवत् ।
अक्षाश्रितत्वमध्यक्षे व्युत्पत्तेरेव कारणम् ॥
निमित्तं तु पुनस्तस्य वस्तुसाक्षात्क्रिया मता ।
तदेवं जैनमध्यक्षं नानुमानेन बाधितम् ॥ 25
न प्रमाणमभावाख्यं बाधकं कुत एव तत् ।
सर्वसंबन्धि चाध्यक्षं[11] नेति तत्रेति यो वदेत् ॥
तस्य सर्वज्ञता प्राप्ता नैकस्यास्य निषेधकृत् ।
अनुमानं निषेधाय यद्युच्येतास्य[12] किंचन ॥
असिद्धावाश्रयासिद्धिः सिद्धौ हेतोर्विरुद्धता । 30
अर्थः [13]को नोपपद्येत विनाऽसर्वज्ञतां[14] तव ॥
अपौरुषेयता नो चेन्नास्याः पूर्वं निषेधनात् ।
नोपमानस्य मानत्वं बाधकं कुत एव तत् ॥
विशेषाः पुंसि[15] दृश्यन्ते तेनादृष्टेषु का कथा ।"

35 तथाहि । केचित् सकलशास्त्रज्ञाः केचिन्न किंचिद्विदन्ति । केचिच्चतुर्वेदपाठकाः । केचिद्गायत्रीमपि न पठन्ति । तत् कथमदृष्टेषु पुरुषेषु साम्यं सिद्ध्येत्? ।

§ १८. ननूक्तं 'दशहस्तान्तरम्' इत्यादि ।

---

१. विधिरपि अ० क० ब० । २. विधिवाधस्य मु० । ३. विशेषः परिकल्पते मु० । ४. कैरेव ब० । कैरवे मु० क० । ५. येनेष्यते क० । ६. °प्रत्यक्षेप्यक्षवी° मु० । ७. नु माने व्य° मु० । ८. वेति मु० । ९. °शेषु राष्ट्रेषु मु० । १०. योऽवदत् मु० । ११. वाध्य° मु० । १२. यद्यच्येतास्य मु० । १३. केनोप° ब० मु० क० । १४. विना सर्व° क० अ० । १५. पुंसु दृश्य° मु० क० ।

"तद्सत्तुल्यजातीयपूर्वबीजप्रवृत्तय ।
ज्ञेयेषु बुद्धयस्तासां सत्यभ्यासे[1] कुत स्थिति ॥
नचैव लङ्घनादेव लङ्घन वल्यतयो ।
तद्धेत्वो स्थितरूपत्वात् लङ्घनस्य स्थितात्मता ॥
वलयन्नोत्थमभ्युचैल्लङ्घन हि गरुत्मति ।
श्रूयते तेन मानत्व नोपमानस्य युक्तिमत् ॥
न चागमविधि कश्चित्तन्निषेधाय वर्तते ।
तन्नास्य बाधक किंचित् साधक प्रतिपादितम् ॥
§ १९ धर्माधर्मज्ञताभावात् सिद्धमसत्समीहितम् ।
यदुक्त तदसत् माननिष्ठा नेच्छानुवर्तिनी ॥"

न हि प्रमाण वस्तुनि प्रवर्तमान विभाषया प्रवर्तते, तेन —

"समस्तवस्तुविस्तारि सार्वज्ञज्ञानमक्रमात् ।
प्रतियज्जगत कार्त्स्न्यं किमन्यत् परिवर्जयेत् ॥
धर्माधर्मो तयो कार्यं वेत्ति नासकलार्थवित् ।"

तदुक्तम् — "जे एगं जाणइ से सव्वं जाणइ ।" [आचा॰ १.३.४.१२२] तथाहि — सकलकर्म-कारण सर्वप्राणिकर्माणि । तत्कार्यं नरकादि । तत्कारणकार्यपरपरायां परमाण्वन्तपरिज्ञाने कथ न सर्वज्ञता ? । तस्मादावरणविगमादनन्तवस्तुज्ञानम् । न च वस्तुपरिसमाप्ति । यथाहि वयमनाद्यनन्तरूपता विकल्पविज्ञानेन रात्रिंदिवादीनां बुध्यामहे न च तत्परिसमाप्ति , तथा भगवतोऽप्यनाद्यनन्तरूपतया साक्षात्कुर्वतो न विरोध । अकरणाधीनतया च न रसास्वादनप्रसङ्ग । अत एवापराधीनतयाऽनियतविषयम् । न चातीतानागतस्य वस्तुन इदानीमसत्त्वेनासद्विषयम् तदिति वाच्यम् । तत्कालालिङ्गितत्वेन तस्य सत्त्वात् । तदापि हि यदि तद्वस्तु न भवेत् तदा तन्निर्विषय स्यात् । अन्यथा चोदनाबुद्धिरपि कथ भूतभवद्भविष्यद्वस्तुविषयिणी सतोऽभ्युपेयते । तदुक्तम् —

"किंच तत्कालयोगेन तस्य साक्षात्क्रिया यदा ।
तदेदानीमसत्त्वेऽपि तस्यास्तित्वमदुर्धरम् ॥"

अथ यस्य भावी सुखस्तदनुभूयमानतया दृष्टस्तेनाप्रतीयमानतया कथमभ्रान्तता ? । तदप्यसत्

"यथा स दृष्ट शरदादिकालयुक्तस्तथा तस्य न बाधितत्वम् ।
तत्कालयोगस्तु न तेन दृष्टस्तथाप्रतीतावपि नास्ति दोष ॥"

यच्च विशेषापरिज्ञाने दूषणमभाणि, तदसत् । यतश्चूडामणिप्रभृतिकेवलीनामतीन्द्रियार्थानामर्हत्प्रणीतत्वेन सुप्रसिद्धत्वात् । यथा यदुक्तम् तदसबद्धतयोपेक्षितमिति । विस्तरेण सर्वज्ञसिद्धावाद[11]टीकायामुक्त[12]मिति विरम्यते ।

बाधाकलङ्कविकल निखिलप्रमाणसामान्यलक्षणमिद विवृत स्वबुद्ध्या ।
एतेन तीर्थिकमतानि निरस्य नीत ज्ञान व्यतीतमनसां परमां प्रतिष्ठाम् ॥ [१२]

॥ इति श्रीशान्त्याचार्यविरचितायां वार्तिकवृत्तौ प्रथम परिच्छेद ॥

---

१ °भ्यासेषु कुत क॰ । २ °षया वर्तते अ॰ ब॰ मु॰ । ३ सर्वज्ञज्ञान मु॰ क॰ । ४ प्रतिपद्यमानम् अ टि॰ । ५ यथाहि मु॰ । ६ परंपरापरमार्थपरि॰ अ॰ । ७ वस्तुपरिज्ञानपरिस॰ क॰ मु॰ । ८ अकरणा॰ मु॰ क॰ । ९ सताभ्यु॰ मु॰ क॰ । १० यदपरि॰ मु॰ । यथपरि॰ क॰ । ११ °वाद टीका॰ क॰ । १२ °मुक्त इति क॰ । १३ यतेन तैर्थिक॰ मु॰ । १४ मनस मु॰ क॰ ।

## २. प्रत्यक्षपरिच्छेदः ।

§ १. एवं प्रमाणसामान्यलक्षणमभिधाय इदानीं संख्या-लक्षण-गोचर-फलविप्रतिपत्ति-निराकरणद्वारेण विशेषलक्षणमभिधातुकामो व्यक्तिभेदकथनमन्तरेण प्रतिव्यक्तिनियतं लक्षणं कथयितुं न शक्यत इति व्यक्तिभेदमेव तावत् कथयितुमाह—ज्ञा[1]त्रपेक्षमित्यादि ॥

**ज्ञात्रपेक्षं प्रमेयस्य द्वैविध्यं न तु वास्तवम् ॥ १२ ॥**

§ २. न हि नीलपीतवद्वस्तुस्थित्या प्रमाणविषयस्य किंचिद्वैविध्यमस्ति । किन्तु ज्ञातारमपेक्षते—ज्ञात्रपेक्षम् । तथाहि—तदेव वस्तु कस्यचित् प्रत्यक्षम्, कस्यचित् परोक्षमिति ।

§ ३. ननु इदं द्वैविध्यं केन प्रतीयते ? । न तावत् प्रत्यक्षेण, परोक्षे तस्याप्रवृत्तेः । प्रवृत्तौ वा प्रत्यक्षतैव स्यात् । अथा[2]कस्माद् धूमदर्शनात् परोक्षे वह्नौ प्रतीतिः प्रत्यक्षा, नानुमानम् । यतोऽनु व्याप्तिस्मरणात् मानम् अनुमानम् । न चेह तदस्ति । नैतदस्ति । यतोऽक्षासंवन्धि[3]न्यपि वस्तुनि यद्यक्षजं ज्ञानं प्रवर्तेत तदा सकलपरोक्षवस्तुविषयं प्रवर्तेत । न हि संनिहितासन्निहितयोः परोक्ष[4]त्वे विशेषोऽस्ति । अथ संवद्धधूमदर्शनात् नातिप्रसङ्गः । तदसत् । यतः किं तदेव धूमदर्शनं परोक्षवह्निविषयं कल्प्य[5]ते ?, किं वा तज्जनितमन्यदिति । न तावत्तदेव । न हि अन्यवस्तुग्राहकमन्यस्य ग्राहकम् । न च तथाप्रतीतिरस्ति । न हि तद्देशोऽन्यदेशो वा वह्निस्तद्दर्शने प्रतिभासते । ननूक्तम् 'संवद्धधूमदर्शनात् तद्दर्शनम्' इति । उक्तमिदम्, किन्त्वयुक्तम् । यतो यद्यप्रतीतसंवन्धोऽपि धूमो धूमध्वजप्रतीतिं जनयति किं न नालिकेरद्वीपायातस्यापि ? । अथ प्रतीतसंवन्ध[6]स्याभ्यासाद् अकस्मात् प्रतीतिः संवन्धस्मृतिं नापेक्षते इत्युच्यते । तन्न, स्मरन्नेवान्तर्लीनं संवन्धं तथा प्रत्येति, अन्यथा अ[7]गृहीतसंवन्धस्यास्य च को विशेषः ? । किञ्च, प्रत्यक्षात्[8] प्रतीतौ विशेषरूपस्य किं न प्रतीतिः ? । कथं न दूरादिति चेत्; न, तत्रापि व्यक्तिविशेषाप्रतीतावपि भास्वरस्य रूपस्य प्रतिभासनात्, न च तथेहेति । तन्न परोक्षे प्रत्यक्षं प्रवर्तत इति । अन्यथा[9] परोक्षमेव तन्न स्यात् । न चेतरेतराश्रयत्वम् । यतः स्वकारणात्साक्षात्कारि विज्ञानमु[10]त्पद्यमानं स्वविषयस्य प्रत्यक्षतां व्यवस्थापयति । तन्न परोक्षे प्रत्यक्षस्य प्रवृत्तिरिति । नाप्यनुमानस्य प्रत्यक्षे । न च मानान्तरमस्ति । सद्भावे वा विषयद्वैविध्यादित्यनर्थकमिति ।

§ ४. अत्रोच्यते । प्रत्यक्षं हीदंतया स्वविषयं परिच्छिदद्यदेवं न भवति तत् सकलमेव परोक्षं व्यवस्थापयति । तथा परोक्षमप्यनिदन्तया स्वविषये प्रवर्तमानं ततोऽन्यत्प्रत्यक्षमिति व्यवस्थापयति । न च परस्परमन[11]न्वयात् कस्य द्वयप्रतीतिरिति वाच्यम् । यस्मान्न ज्ञानमात्मनः सर्वथा भिन्नम् । किन्तु आत्मैव कर्मक्षयोपशमादिन्द्रियद्वारेण लिङ्गद्वारेण वा स्पष्टास्पष्टतया वस्तु प्रतिपद्यत इति कथम[12]नन्वयः ? । [ १२ ]

---

१. ज्ञानापेक्ष° मु० । २. अथ कस्मा° क० व० मु० । ३. °सबद्धेपि मु० । ४. पक्षत्वे क० । ५. कल्पते अ० । कथ्यते मु० क० । ६. °संवन्धस्य ( पं० १७ ) च को विशेष ? ( पं० १९ ) । क० । ७. अन्यथा गृहीत- व० मु० । ८. प्रत्यक्षाप्रतीते मु० । ९. अन्यथापरो° क० । १०. °मुत्पाद्यमा° मु० । ११. °मन्वयात् मु० क० । १२. कथमन्वयः मु० क० ।

